शक्त्युद्भवानुद्भवाभ्यां[1] नाऽशक्योपदेशः ११

न कालयोगतो व्यापिनो नित्यस्य सर्वसम्बन्धात् १२

[2]न देशयोगतोऽप्यस्मात् १३

नावस्थातो देहधर्मत्वात् तस्याः १४

असङ्गोऽयं पुरुष इति[3] १५

न कर्मणा[4]न्यधर्मत्वादतिप्रसक्तेश्च[5] १६

विचित्रभोगानुपपत्तिरन्यधर्मत्वे १७

प्रकृतिनिबन्धना[6]च्चेन्न तस्या अपि पारतन्त्र्यम् १८

[7]न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते १९

नाविद्यातोऽप्यवस्तुना बन्धायोगात् २०

वस्तुत्वे सिद्धान्तहानिः २१

वि[8]जातीयद्वैतापत्तिश्च २२

विरुद्धोभयरूपा चेत् २३

न तादृक्पदार्थाप्रतीतेः २४

न वयं षट्पदार्थवादिनो वैशेषिकादिवत् २५

[9]अनियतत्वेऽपि नायौक्तिकस्य संग्रहोऽन्यथा बालोन्मत्तादिसमत्वम् २६

नानादिविषयोपराग[10]निमित्तकोऽप्यस्य २७

न बाह्याभ्यन्तरयो[11]रुपरज्योपरञ्जकभावोऽपि देश[12]व्यवधानात् स्रुघ्नस्थ-पाटलिपुत्रस्थयोरिव २८

द्वयोरेकदेशलब्धोपरागान्न व्यवस्था २९

---

१ शक्त्युद्भवाभिभवाभ्यां. २. इदं सूत्रं क्वचिन्नास्ति. ३. ' श्रुतिरस्ति सा बाधिता स्यात् ' इत्यपि योजयन्ति. ४. कर्मणो. ५. ' च ' रहितोऽपि पाठः ६: प्रकृतिनिबन्धना चेन्न. ७. ' नित्य ' रहितोऽपि पाठः ८. विजातीये; ' च ' विरहितोऽपि. ९. क्वचित् ' बालोन्मत्तादिसमत्वम् ' इत्येव सूत्रं. १०. निमित्ततः ' ' निमित्तः ' वा. ११. उपरज्य. १२. 'देशभेदात् ':

अदृष्टवशाच्चेत् ३०

न द्वयोरेककालायोगादुपकार्योपकारकभावः ३१

पुत्रकर्मवदिति चेत् ३२

नास्ति हि[1] तत्र स्थिर एकात्मा[2] यो गर्भाधानादिना[3] संस्क्रियते ३३

स्थिरकार्यासिद्धेः क्षणिकत्वम्[4] ३४

न[5] प्रत्यभिज्ञाबाधात् ३५

श्रुतिन्यायविरोधाच्च ३६

दृष्टान्तासिद्धेश्च ३७

युगपज्जायमानयोर्न कार्यकारणभावः ३८

पूर्वापाये उत्तरायोगात्[6] ३९

तद्भावे तदयोगादुभयव्यभिचारादपि न ४०

पूर्वभावमात्रे[7] न नियमः ४१

न विज्ञानमात्रं बाह्यप्रतीतेः ४२

तदभावे तदभावाच्छून्यं तर्हि[8] ४३

शून्यं तत्त्वं भावो विनश्यति वस्तुधर्मत्वाद्विनाशस्य ४४

अपवादमात्रमबुद्धानाम् ४५

उभयपक्षसमानक्षेमत्वादयमपि[9] ४६

अपुरुषार्थत्वमुभयथा ४७

न गतिविशेषात् ४८

निष्क्रियस्य तदसंभवात् ४९

मूर्तत्वाद् घटादिवत् समानधर्मापत्तावपसिद्धान्तः ५०

गतिश्रुतिरप्युपाधियोगादाकाशवत् ५१

---

१. 'हि' शब्दरहितोऽपि पाठः. २. एक [illegible] ३. [illegible] गर्भाधानादिकर्मणा.
४. क्षणिकत्वे सत्त्वमर्थक्रियाकारित्वं. ५. [illegible] ६. [illegible]
७. पूर्वभावित्वमात्रेन, पूर्वभाविमात्रेण वा. ८. [illegible]

न कर्मणाप्य[1]तद्धर्मत्वात् ५२

अतिप्रसक्तिरन्यधर्मत्वे[2] ५३

निर्गुणादि[3]श्रुतिविरोधश्चेति[4] ५४

तद्योगो[5]ऽप्यविवेकान्न समानत्वम् ५५

नियतकारणात्तदुच्छित्तिर्ध्वान्तवत् ५६

प्रधाना[6]विवेकादन्याविवेकस्य तद्धाने हानम् ५७

वाङ्मात्रं न तु[7] तत्त्वं चित्तस्थितेः ५८

युक्तितोऽपि न बाध्यते दिङ्मूढवदपरोक्षादृते ५९

अचाक्षुषाणामनुमानेन बोधो धूमादिभिरिव वह्नेः ६०

सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात् पञ्चतन्मात्राण्युभयमिन्द्रियं तन्मात्रेभ्यः[8] स्थूलभूतानि पुरुष इति पञ्चविंशतिर्गणः ६१

स्थूलात् प[9]ञ्चतन्मात्रस्य ६२

बाह्याभ्यन्तराभ्यां तैश्चा[10]हङ्कारस्य ६३

तेनान्तःकरणस्य ६४

ततः प्रकृतेः ६५

संहत[11]परार्थत्वात् पुरुषस्य ६६

मूले मूलाभावादमूलं मूलम् ६७

पारम्पर्येऽप्येकत्र परिनिष्ठेति संज्ञामात्रम् ६८

समानः प्रकृतेर्द्वयोः ६९

अधिकारित्रैविध्यान्न नियमः ७०

---

१. °प्येत° २. अग्रिमसूत्रादनन्तरमपि पाठः. ३. विरुद्धः, ४. ' इति ' शून्योऽपि पाठः. ५. तद्योगे. ६. प्रथमाविवेकरहितोऽपि पाठः. ७. क्वचित् तुकारो नकारात् पूर्वं. ८. ' तन्मात्रेभ्यः ' रहितोऽपि. ९. पञ्चतन्मात्रा. १०. ' च ' रहितोऽपि पाठः. ११. संघातपरार्थत्वात्.

महदाख्य[1]माद्यं कार्यं तन्मनः ७१

चरमोऽहङ्कारः ७२

तत्कार्यत्वमुत्तरेषाम्[2] ७३

आद्यहेतुता तद्द्वारा[3] पारम्पर्येऽप्यणुवत्[4] ७४

पूर्वभावित्वे[5] द्वयोरेकतरस्य हानेऽन्यतरयोगः[6] ७५

परिच्छिन्नं न[7] सर्वोपादानम् ७६

तदुत्पत्तिश्रुतेश्च[8] ७७

नावस्तुनो वस्तुसिद्धिः ७८

अबाधाददुष्टकारणजन्यत्वाच्च नावस्तुत्वम् ७९

भावे तद्योगेन तत्सिद्धिरभावे तदभावात् कुतस्तरां[9] तत्सिद्धिः ८०

न कर्मण[10] उपादानत्वायोगात्[11] ८१

नानुश्रविकादपि[12] तत्सिद्धिः साध्यत्वेनावृत्तियोगादपुरुषार्थत्वम् ८२

तत्र प्राप्तविवेकस्यानावृत्तिश्रुतिः ८३

दुःखाद्दुःखं जलाभिषेकवन्न जाड्यविमोकः[13] ८४

काम्येऽकाम्येऽपि[14] साध्यत्वाविशेषात् ८५

निजमुक्तस्य बन्धध्वंसमात्रं[15] परं न समानत्वम्[16] ८६

द्वयोरेकतरस्य वाप्यसन्निकृष्टार्थपरिच्छित्तिः[17] प्रमा तत्साधकं[18] यत्तत् त्रिविधं[19] प्रमाणम् ८७

[20]तत्सिद्धौ सर्वसिद्धेर्नाधिक्यसिद्धिः ८८

---

१. आख्यारहितः पाठः. २. अन्येषाम्. ३. आद्यहेतुद्वारा ४. पारम्पर्येणाणुवत्. ५. पूर्वाभावित्वे. ६. द्वयोरेकतरहानेनान्यतरयोगः. ७. 'न' इति आदौ अपि; परिच्छिन्नत्वान्न वा. ८. 'च' रहितोऽपि. ९. 'तरां' इति वर्जितः. १०. कर्मणा. ११. उपादानायोगात. १२. श्रा. १३. विमोक्षः १४. काम्याकाम्ये. १५. मात्र परं. १६. समत्वम्. १७. चाप्य, वासं वा. १८.साधकतमं. १९. 'त्रिविधं' रहितः पाठः, 'त्रिविधं प्रमाणं' रहितो वा. २०. आदौ त्रिविधं प्रमाणं, इति संयोज्य.

यत्सम्बद्धं सत्[1] तदाकारोल्लेखि विज्ञानं तत्प्रत्यक्षम् ८९

योगिनामबाह्यप्रत्यक्षत्वान्न दोषः[2] ९०

लीनवस्तुलब्धातिशयसम्बन्धाद्वाऽदोषः ९१

ईश्वरासिद्धेः ९२

मुक्तबद्धयोरन्यतराभावान्न[3] तत्सिद्धिः ९३

उभयथाप्यसत्करत्वम् ९४

मुक्तात्मनः[4] प्रशंसा उपासा[5] सिद्धस्य वा[6] ९५

तत्सन्निधानादधिष्ठातृत्वं मणिवत् ९६

विशेषकार्येष्वपि[7] जीवानाम् ९७

सिद्धरूपबोद्धृत्वाद्वाक्यार्थोपदेशः ९८

अन्तःकरणस्य तदुज्ज्वलितत्वाल्लोहवदधिष्ठातृत्वम्[8] ९९

प्रतिबन्धदृशः[9] प्रतिबद्धज्ञानमनुमानम् १००

आप्तोपदेशः शब्दः १०१

उभयसिद्धिः प्रमाणात् तदुपदेशः १०२

सामान्यतो दृष्टादुभयसिद्धिः १०३

चिदवसानो भोगः १०४

अकर्तुरपि फलोपभोगोऽन्नाद्यवत्[10] १०५

[11]अविवेकाद्वा तत्सिद्धेः कर्तुः फलावगमः[12] १०६

नोभयं च तत्त्वाख्याने १०७

---

१. 'सन्' इत्यस्य स्थाने सिद्धं वा पाठः, 'यत्सम्बन्धसिद्धं वा. २. 'न दोषः' इति वा—संबन्धान्न दोषः. ३. 'मुक्ताऽमुक्तयोः' इति वा. ४. 'प्रशंसोपासा' वा; 'विधि वाक्योत्तम्भनाया' इति विशेषो वा. ५. उपासना, उपास्या. ६. वेति. ७. विशेषकार्येपि. ८. 'उपज्वलित' इति वा. ९. 'प्रतिबन्धदृशः' 'प्रतिबद्धदृशः' इति वा. १०. अन्नादिवत्', वा. ११. अविवेकाद्वा तत्सिद्धिः' इत्येनावान् एव पाठः. १२. 'गतः.

विषयो[1]ऽविषयोऽप्यतिदूरादेर्हानोपादानाभ्यामिन्द्रियस्य १०८
सौक्ष्म्यात्[2]तदनुपलब्धिः १०९
कार्यदर्शनात्तदुपलब्धेः[3] ११०
वादिविप्रतिपत्तेस्तदसिद्धिरिति चेन्[4] १११
तथा[5]प्येकतरदृष्ट्या एकतर[6]सिद्धेर्नापलापः ११२
त्रिविधविरोधापत्तेश्च[7] ११३
नासदुत्पादो नृशृंगवत् ११४
उपादाननियमात् ११५
सर्वत्र सर्वदा सर्वासम्भवात् ११६
शक्तस्य[8] शक्यकरणात्[9] ११७
कारणभावाच्च[10] ११८
न[11] भावे भावयोगश्चेत् ११९
नाभिव्यक्तिनिबन्धनौ व्यवहाराव्यवहारौ १२०
नाशः कारणलयः १२१
पारम्पर्यतोऽन्वेषणा[12] बीजाङ्कुरवत् १२२
उत्पत्तिवद्वा[13]ऽदोषः १२३
हेतु[14]मदनित्यमव्यापि सक्रिय[15]मनेकमाश्रितं लिङ्गम् १२४
आञ्जस्यादभेदतो वा गुणसामान्यादेस्तत्सिद्धिः
प्रधानव्यपदेशाद्वा[16] १२५
त्रिगु[17]णाचेतनत्वादि द्वयोः १२६

---

१. अविषयो रहितः. २. 'तत्' इत्यनेन विरहितः पाठः. ३. प्रथमान्तो वा पाठः. ४. 'चेत्' इति वर्जितं. ५. अथा°. ६. °दृष्ट्यान्तर°. ७. 'चे' ति नावश्यं ८. शक्यस्य. ९. °कारणात्. १०. 'च' रहितः. ११. 'नाभावः' इति वा; भावे भावयोगश्चेन्न वाच्यम् वा वाक्यं वा. १२. ऽन्वेषणाद्वी°. १३. 'वा' रहितो वा पाठः. १४. 'लिङ्गं' इत्येव वा सूत्रं; अव्यापि रहितः वा. १५. सक्रियकम°, १६. 'तथा प्रधानशब्दात्' इत्यधिकं सूत्रं. १७. 'त्रिगुणचेतनत्वादि द्वयोः' [illegible]

प्रीत्यप्रीतिविषादाद्यैर्गुणानाम[1]न्योन्यं वैधर्म्यम् १२७

[2]लघ्वादिधर्मैः साधर्म्यं वैधर्म्यं च गुणानाम् १२८

उभयान्यत्वात् कार्यत्वं महदादेर्घटादिवत् १२९

परिमाणात्[3] १३०

समन्वयात् १३१

शक्तितश्चेति १३२

तद्धाने प्रकृतिः पुरुषो वा १३३

तयोरन्यत्वे[4] तुच्छत्वम्[5] १३४

कार्यात् कारणानुमानं तत्साहित्यात् १३५

अव्यक्तं त्रिगुणाल्लिङ्गात् १३६

तत्कार्यतस्तत्सिद्धेर्नापलापः १३७

सामान्येन विवादाभावाद्धर्मवन्न साधनम्[6] १३८

शरीरादिव्यतिरिक्तः पुमान् १३९

संहतपरार्थत्वात्[7] १४०

त्रिगुणादिविपर्ययात् १४१

अधिष्ठानाच्चेति[8] १४२

भोक्तृभावात् १४३

कैवल्यार्थं[9] प्रवृत्तेश्च १४४

जडप्रकाशायोगात् प्रकाशः १४५

निर्गुणत्वान्न[10] चिद्धर्मा १४६

श्रुत्या सिद्धस्य नापलापस्तत्प्रत्यक्षबाधात् १४७

---

१. 'अन्योन्यवैधर्म्यं' इति समासान्तः पाठः. २. लघ्वादिधर्मैरन्योऽन्यं साधर्म्यं वैधर्म्यं गुणानाम्. ३. परिणामात्. ४. उभयोरपि. ५. तुच्छता. ६. तत्साधनम्. ७. संहतपदार्थत्वात् ८. अधिष्ठातृत्वाच्चेति. ९. समस्तं सूत्रं; कैवल्यार्थे वा; प्रकृतेः वा; 'च' रहितः वा. १०. निर्गुणत्वाच्च न.

सुषुप्त्याद्यसाक्षित्वम्[1] १४८
जन्मादिव्यवस्थातः पुरुषबहुत्वम्[2] १४९
उपाधिभेदेऽप्येकस्य नानायोग आकाशस्येव[3] घटादिभिः १५०
उपाधिर्भिद्यते न तु तद्वान् १५१
एवमेकत्वेन[4] परिवर्तमानस्य न विरुद्धधर्माध्यासः १५२
अन्यधर्मत्वेऽपि नारोपात् तत्सिद्धिरेकत्वात् १५३
नाद्वैतश्रुतिविरोधो जातिपरत्वात् १५४
विदितबन्धकारणस्य दृष्ट्याऽतद्रूपम्[5] १५५
नान्धादृष्ट्या[6] चक्षुष्मतामनुपलम्भः १५६
वामदेवादिर्मुक्तो[7] नाद्वैतम् १५७
अनादावद्य यावदभावाद्भविष्यदप्येवम् १५८
इदानीमिव सर्वत्र नात्यन्तोच्छेदः १५९
व्यावृत्तोभयरूपः[8] १६०
साक्षात्सम्बन्धात्[9] साक्षित्वम् १६१
नित्यमुक्तत्वम्[10] १६२
औदासीन्यं चेति १६३
उपरागात् कर्तृत्वं चित्सान्निध्याच्चित्सान्निध्यात् १६४

इति प्रथमोऽध्यायः ।

---

१. सुषुप्त्यादिसाक्षित्वं. २. पुरुषस्य बहुत्वम्. ३. इवार्थ ‘ व ’ शब्दो वा. ४. ‘ एकमेकत्वेन ’ वा, परमेकत्वेन वा. ५. तद्रूपं ’ वा. ६. ‘ नान्धदृष्टया ’ वा ७. °दिमुक्तेः. ८. °भयं रूपः. ९. अक्षसम्ब[illegible] १०. ‘ नित्यमुक्तत्वमौदासीन्यं चेती ’ ति एकं सूत्रं वा.

## अथ द्वितीयोऽध्यायः

विमुक्तमोक्षार्थं [1]स्वार्थं वा प्रधानस्य १

विरक्तस्य [2]तत्सिद्धेः २

न श्रवणमात्रात् [3]तत्सिद्धिरनादिवासनाया बलवत्त्वात् ३

बहुभृत्यवद्वा प्रत्येकम् ४

प्रकृतिवास्तवे च पुरुषस्याध्याससिद्धिः ५

कार्यतस्तत्सिद्धेः ६

चेतनोद्देशान्नियमः कण्टकमोक्षवत् ७

अन्ययोगेऽपि तत्सिद्धिर्नाञ्जस्येनायोदाहवत् ८

[6]रागविरागयोर्योगः सृष्टिः ९

महदादिक्रमेण पंचभूतानाम् १०

आत्मार्थत्वात् सृष्टेर्नैषामात्मार्थ आरम्भः ११

दिक्कालावाकाशादिभ्यः १२

अध्यवसायो बुद्धिः १३

तत्कार्यं [9]धर्मादि १४

महदुपरागाद्विपरीतम् १५

अभिमानोऽहङ्कारः। १६

[10]एकादशपंचतन्मात्रं [11]यत्कार्यम् १७

सात्त्विकमेकादशकं प्रवर्तते वैकृतादहङ्कारात् १८

कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशकम् १९

[12]आहङ्कारिकत्वश्रुतेर्न भौतिकानि २०

---

१. विमोक्षार्थं. २. तत्सिद्धिः. ३. न वाक्यात्तत्सिद्धिर०. ४. अनादिवास्नापटुत्वात. ५. प्रथमान्तः पाठः. ६. रागविरागयोगः सृष्टेः. ७. च सहितः पाठः, पञ्चस्थाने च वा. ८. मात्मार्थं. ९. धर्मादिः. १०. एकादशं. ११. तत्कार्यं. १२. अहङ्कारिकत्वं.

देवतालय[1]श्रुतिर्नारम्भकस्य २१

[2]तदुत्पत्तिश्रुतेर्विनाशदर्शनाच्च २२

[3]अतीन्द्रियमिन्द्रियं भ्रान्तानामधिष्ठाने[4] २३

[5]शक्तिभेदेऽपि भेदसिद्धौ नैकत्वम् २४

न कल्पनाविरोधः प्रमाणदृष्टस्य २५

[6]उभयात्मकं मनः २६

गुणपरिणामभेदान्नानात्वमवस्थावत् २७

रूपादिरस[7]मलान्त उभयोः २८

द्रष्टृत्वादिरात्मन[8]ः करणत्वमिन्द्रियाणाम् २९

त्रयाणां स्वालक्षण्यम्[9] ३०

[10]सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च[11] ३१

क्रमशोऽक्रमशश्चेन्द्रिय[12]वृत्तिः ३२

वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः[13] ३३

तन्निवृत्तावुपशान्तोपरागः[14] स्वस्थः ३४

कुसुमवच्च मणिः ३५

पुरुषार्थं करणोद्भवोऽप्यदृष्टोल्लासात् ३६

धेनुवद्वत्साय ३७

करणं [15]त्रयोदशविधमवान्तरभेदात् ३८

इन्द्रियेषु [16]साधकतमत्वगुणयोगात् कुठारवत् ३९

---

१. श्रुतेः. २. तदुत्पत्तिः श्रूयते. ३. 'इन्द्रियं' रहितः. ४. °धिष्ठानं. ५. शक्तिभेदसिद्धौ. ६. उभयात्मकं च मनः. ७. °वर्गान्त. ८. °रात्मनां. ९. सूत्रान्ते 'महदहङ्कारमनसां;' स्वलक्षण्यं वा. १०. सामान्या. ११. 'सामान्यकरणवृत्तिः' इत्येतावदेव सूत्रं. १२. वृत्तयः. १३. सूत्रान्ते 'प्रमाणविपर्ययविकल्पनिद्रास्मृतयः'; च वा. १४. °वुपशान्तोपक्लेशः [illegible] त्रयोदशम°; बाह्यान्तरभेदात्. १६. साधकतमत्वं; गुण [illegible]

द्वयोः [1]प्रधानं मनो लोकवद् भृत्यवर्गेषु ४०

अव्यभिचा[2]रात् ४१

[3]तथाऽशेषसंस्काराधारत्वात् ४२

स्मृत्यानुमानाच्च ४३

सम्भवेन्न स्वतः ४४

आपेक्षिको गुणप्रधानभा[4]वः क्रियाविशेषात् ४५

तत्कर्मार्जितत्वात् तदर्थ[5]मभिचेष्टा लोक[6]वत् ४६

[7]समानकर्मयोगे बुद्धेः प्राधान्यं लोकवल्लोकवत् ४७

इति द्वितीयोऽध्यायः।

---

## अथ तृतीयोऽध्यायः

अविशेषाद्विशेषारम्भः १

[8]तस्माच्छरीरस्य २

तद्बीजात्संसृतिः ३

[9]आ विवेकाच्च प्रवर्तनमविशेषाणाम् ४

[10]उपभोगादितरस्य ५

संप्रति परि[11]मुक्तो द्वाभ्याम् ६

मातापितृजं स्थूलं प्रायश इतरन्न तथा ७

पूर्वोत्पत्तेस्तत्कार्यत्वं भोगादेकस्य नेतरस्य ८

सप्तदशैकं लिङ्गम् ९

व्यक्तिभेदः कर्मविशेषात् १०

[12]तदधिष्ठानाश्रये देहे तद्वादात् तद्वादः ११

---

१. बुद्धिः. २. अव्यभिचारी. ३. यथा. ४. गुणप्रवाहभावः. ५. अपि चेष्टा. ६. 'लोकवत्' इत्यस्य आम्रेडितत्वं. ७. त्यक्तमिदं सूत्रं. ८. इदं च त्यक्तं. ९. अविवेकाच्च. १०. इदमपि त्यक्तं; यदुपभोगा°. ११. परिप्वक्तो. १२. तदधिष्ठाना-श्रयदेहे.

न स्वातन्त्र्यात् तद्दते छायावच्चित्रवच्च १२
मूर्तत्वेऽपि न[1] सङ्घातयोगात् तरणिवत् १३
अणुपरिमाणं तन्कृतिश्रुतेः[2] १४
तदन्नमयत्वश्रुतेश्च[3] १५
पुरुषार्थं संसृति[4]र्लिङ्गानां सूपकारवद्राज्ञः[5] १६
पाञ्चभौतिको देहः १७
चातुर्भौतिकमित्येके[6] १८
ऐकभौतिकमित्यपरे[7] १९
न सांसिद्धिकं चैतन्यं [8]प्रत्येकादृष्टेः २०
[9]प्रपञ्चमरणाद्यभावश्च २१
मदशक्तिवच्चेन्[10] प्रत्येकपरिदृष्टे [11]सांहत्ये तदुद्भवः २२
ज्ञानान्मुक्तिः २३
बन्धो विपर्ययात् २४
नियतकारणत्वान्न[12] समुच्चयविकल्पौ २५
[13]स्वप्नजागराभ्यामिव मायिकाभ्यां नोभयोर्मुक्तिः पुरुषस्य २६
इतरस्यापि नात्यन्तिकम्[14] २७
सङ्कल्पितेऽप्येवम् २८
भावनोपचयाच्छुद्धस्य[15] सर्वं[16] प्रकृतिवत् २९
रागोपहतिर्ध्यानम्[17] ३०
वृत्तिनिरोधात् तत्सिद्धिः ३१
धारणासनस्वकर्मणा तत्सिद्धिः ३२

---

१. 'न संगात् योगात'; 'न संघातः योगात्' २. तद्गतिश्रुतेः. ३. च रहितः. ४. 'संमृतिलिङ्गानां' 'प्रवृत्तिलिङ्गानां' वा. ५. °कारवद्वा. ६. °मित्यन्ये. ७. अपरः; °कमपरे. ८. प्रत्येका[illegible]यश्च. १०. चैतत्. ११. सौक्ष्म्यात्सांहत्ये. १२. नियतकार[illegible] इति विशेषः. १४. नात्यन्तिकत्वम्' १५. बुद्धस्य[illegible]

निरोधश्छर्दि[1]विधारणाभ्याम् ३३

स्थिरसुखमासनम् ३४

स्वकर्मस्वाश्रमविहित[2]कर्मानुष्ठानम् ३५

वैराग्यादभ्यासाच्च ३६

विपर्ययभेदाः पञ्च ३७

अशक्तिरष्टाविंशतिधा[3] तु ३८

तुष्टिर्नवधा ३९

सिद्धिरष्टधा ४०

अवान्तरभेदा[4]: पूर्ववत् ४१

एवमितरस्याः ४२

आध्यात्मिकादिभेदान्नवधा तुष्टिः ४३

ऊहादिभिः सिद्धिः[5] ४४

नेतरादितरहानेन विना ४५

दैवादि[6]प्रभेदा ४६

आब्रह्मस्तम्भपर्यन्तं तत्कृते[7] सृष्टिराविवेकात् ४७

ऊर्ध्वं[8] सत्त्वविशाला ४८

तमोविशाला मूलतः ४९

मध्ये रजोविशाला ५०

कर्मवैचित्र्यात् प्रधानचेष्टा गर्भदासवत् ५१

आवृत्तिस्तत्राप्युत्तरोत्तरयोनियोगाद्धेयः ५२

समानं[9] जरामरणादिजं दुःखम् ५३

न कारणलयात् कृतकृत्यता मग्नवद्[10]उत्थानात् ५४

---

१. अग्रिमसूत्रादनन्तरमपि पाठः. २. °विहितं. ३. 'तु' रहितः. ४. भेदात्. ५. 'अष्टधा' इति अधिकं. ६. दैवादिप्रभेदाः. ७. तत्कृता सृष्टिः ८. सत्य. ९. समान; सर्वत्र. १०. स्नानवद्.

अकार्यत्वेऽपि तद्योगः पारवश्यात् ५५
स हि सर्ववित् सर्वकर्ता ५६
ईदृशेश्वरसिद्धिः सिद्धा ५७
प्रधानसृष्टिः परार्थं स्वतोप्यभोक्तृत्वादुष्ट्रकुङ्कुमवहनवत्[1] ५८
अचेतनत्वेऽपि क्षीरवच्चेष्टितं प्रधानस्य ५९
कर्मवद्दृष्टेर्वा[2] कालादेः ६०
स्वभावाच्चेष्टितमनभिसन्धानाद् भृत्यवत् ६१
कर्माकृष्टेर्वानादितः[3] ६२
विविक्तबोधात् सृष्टिनिवृत्तिः प्रधानस्य सूदवत् पाके ६३
इतर इतरवत्[4] तद्दोषात् ६४
द्वयोरेकतरस्य[5] वौदासीन्यमपवर्गः[6] ६५
अन्यसृष्ट्युपरागेऽपि[7] न विरज्यते[8] प्रबुद्धरज्जुतत्त्वस्येवोरगः ६६
कर्मनिमित्तयोगाच्च ६७
नैरपेक्ष्येऽपि[9] प्रकृत्युपकारेऽ[10] विवेको निमित्तम् ६८
नर्तकीवत् प्रवृत्तस्यापि[11] निवृत्तिश्चारितार्थ्यात् ६९
दोषबोधेऽपि[12] नोपसर्पणं प्रधानस्य कुलवधूवत् ७०
नैकान्ततो बन्धमोक्षौ पुरुषस्याविवेकादृते[13] ७१
प्रकृतेराञ्जस्यात् ससङ्गत्वात्[14] पशुवत् ७२
रूपैः सप्तभिरात्मानं बध्नाति प्रधानं कोशकारवद्विमोचयत्येकरूपेण[15][16][17] ७३
निमित्तत्वमविवेकस्य[18] न दृष्टहानिः[19] ७४

---

१. उष्ट्रकुङ्कुमवत्. २. कर्मकरकृष्टं वा; कर्मकरकृतवद्वा. ३. °र्वाप्यना° ४. इतरजहाति; इतरत्. ५. द्वयोरितरस्य ६. वाप्यौदासीन्यं. ७.' तत्त्वस्येवोपरागः' च परिवर्तितं; °स्यै°, अन्यसृष्ट्युपरागात्र. ८. विरमते अ०; 'निवर्ततेऽ ९. नैरपेक्षे. १०. °प्य°. ११. प्रवर्तकस्यापि. १२. [illegible] विवेकादृते. १४. संसर्गत्वात्. १५. कोष°. १६. [illegible] रूपेण. १८. कस्येति. १८. दृष्टान्तहानिः.

तत्त्वाभ्यासान्नेति नेतीति[1] त्यागाद् विवेकसिद्धिः ७५

[2]अधिकारिप्रभेदान्न नियमः ७६

बाधितानुवृत्त्या[3] [4]मध्यविवेकतोऽप्युपभोगः[5] ७७

जीवन्मुक्तश्च[6] ७८

[7]उपदेश्योपदेष्टृत्वात्[8] तत्सिद्धिः ७९

श्रुतिश्च ८०

इतरथान्धपरंपरा ८१

चक्रभ्रमणवद् धृतशरीरः[9] ८२

संस्कारलेशतस्तत्सिद्धिः[10] ८३

विवेकान्निःशेषदुःखनिवृत्तौ कृतकृत्यता[11] नेतरान्नेतरात् ८४

इति तृतीयोऽध्यायः।

---

अथ चतुर्थोऽध्यायः

राजपुत्रवत् तत्त्वोपदेशात्[12] १

पिशाचवदन्यार्थोपदेशेऽपि[13] २

आवृत्तिरसकृदुपदेशात् ३

पितापुत्रवदुभयोर्दृष्टत्वात् ४

श्येनवत्[14] सुखदुःखी त्यागवियोगाभ्याम्[15] ५

अहिनिर्ल्वयिनीवत्[16] ६

छिन्नहस्तवद्वा ७

असाधनानुचिन्तनं[17] बन्धाय भरतवत् ८

---

१. अन्तिमेतिशब्दवर्जं. २. अधिकार°. ३. बाधितानुवृत्तेः. ४. मध्यविवेकता. ५. अपभोगः ६. 'च' रहितः. ७. उपदेशो°. ८. °पदेशत्वात्. ९. हतशरीरः. १०. संस्कारलोपस्त°; संस्कारालेशतस्त°. ११. कृतकृत्यो. १२ राजपुत्रस्तत्त्वो°. १३. उपदेशोऽपि. १४. श्वानवत्. १५. श्येनवत्सुखदुःखभोगाभ्यां. १६. °निर्ल्वयनीवत्; °निर्ल्विंवयिनीवत्. १७. चिन्तनवधाय बन्धवत.

बहुभिर्योगे[1] विरोधो रागादिभिः[2] कुमारीशङ्खवत् ९
द्वाभ्यामपि तथैव[3] १०
निराशः सुखी पिङ्गलावत्[4] ११
अनारंभेऽपि[5] परगृहे सुखी सर्पवत् १२
बहुशास्त्रगुरूपासनेऽपि सारादानं षट्पदवत् १३
इषुकारवन्नैकचित्तस्य समाधिहानिः १४
कृत[6]नियमलङ्घनादानर्थक्यं लोकवत् १५
तद्विस्मरणेऽपि[7] भेकीवत् १६
नोपदेश[8]श्रवणेऽपि कृतकृत्यता[9] परामर्शादृते विरोचनवत् १७
दृष्टस्तयोरिन्द्रस्य १८
प्रणतिब्रह्मचर्योपसर्पणानि कृत्वा[10] सिद्धिर्बहुकालात् तद्वत् १९
न कालनियमो वामदेववत् २०
अध्यस्तरूपोपासनात् पारंपर्येण यज्ञोपासकानामिव २१
इतरलाभेऽप्यावृत्तिः[11] पञ्चाग्नियोगतो जन्मश्रुतेः २२
विरक्तस्य हेयहानमुपादेयोपादानं हंसक्षीरवत् २३
लब्धा[12]तिशययोगाद्वा तद्वत् २४
न[13] काम[14]चारित्वं रागोपहते शुकवत् २५
गुणयोगाद् बद्धः[15] शुकवत् २६
न भोगाद्रागशान्तिर्मुनिवत् २७
दोषदर्शनादुभयोः २८

१. °र्योगविरोधो. २. कुमारीकङ्कणशङ्खवत्. ३. सूत्रान्ते चकारोऽपि. ४. पिङ्गलादिवत. ५. अपिस्त्यक्तः. ६. व्रतनियमोल्लङ्घनात्, वृत°; वृत्त°. ७. अपिस्त्यक्तः. ८. नोपदेशो. ९. कृतकृत्यः. १०. °प्रसर्पणान्कृत्वा. ११. व्यावृत्तिः. १२. लब्धातिशये योगाद्वा; वा रहितः. [redacted]
इत्युक्त्वा पठितं. १४. कामविचारित्वं; कामिचारित्वं. [redacted]

न मलिन[1]चेतस्युपदेशबीजप्ररोहोऽजवत् २९

नाभासमात्रमपि मलिनदर्पणवत् ३०

न तज्जस्यापि[2] तद्रूपता पङ्कजवत्[3] ३१

न भूतियोगेऽपि[4] कृतकृत्यतोपास्यसिद्धिवदुपास्यसिद्धिवत् ३२

इति चतुर्थोऽध्यायः

---

अथ पञ्चमोऽध्यायः

मङ्गलाचरणं शिष्टाचारात् फलदर्शनाच्छ्रुतितश्चेति[5] १

नेश्वराधिष्ठिते[6] फलनिष्पत्तिः[7] कर्मणा तत्सिद्धेः २

स्वोपकारादधिष्ठानं लोकवत् ३

लौकिकेश्वरवदितरथा ४

पारिभाषिको वा ५

न रागादृते तत्सिद्धिः[8] प्रतिनियतकारणत्वात् ६

तद्योगेऽपि न नित्यमुक्तः ७

प्रधानशक्तियोगाच्चेत् सङ्गापत्तिः ८

सत्तामात्राच्चेत् सर्वैश्वर्यम् ९

प्रमाणाभावान्न तत्सिद्धिः १०

सम्बन्धाभावान्नानुमानम् ११

श्रुतिरपि प्रधानकार्यत्वस्य[9] १२

नाविद्याशक्तियोगो निःसङ्गस्य १३

तद्योगे तत्सिद्धावन्योन्याश्रयत्वम् १४

न बीजाङ्कुरवत् सादि[10]संसारश्रुतेः १५

---

१. मलिने. २. तज्जन्यस्यापि. ३. पङ्कजादिवत्. ४. अपि रहितः. ५ °द्भूतितश्चेति. ६. °धिष्ठितैव; °धिष्ठित; °धिष्ठितः. ७. फलसंपत्तिः, °संपत्; सदाफलसंपत्तिः ८. जगत्सिद्धिः. ९. कार्यस्य. १०. सादिश्रुतेः.

विद्यातोऽन्यत्वे ब्रह्मबाधप्रसंगः[1] १६
अबाधे नैष्फल्यम्[2] १७
विद्याबाध्यत्वे जगतोऽप्येवम् १८
तद्रूपत्वे सादित्वम् १९
न धर्मापलापः प्रकृतिकार्यवैचित्र्यात् २०
श्रुतिलिङ्गादिभिस्तत्सिद्धिः २१
न नियमः प्रमाणान्तरावकाशात् २२
उभयत्राप्येवम् २३
अर्थात् सिद्धिश्चेत् समानमुभयोः २४
अन्तःकरणधर्मत्वं धर्मादीनाम् २५
गुणादीनाञ्च[3] नात्यन्तबाधः २६
पञ्चावयवयोगात्[4] सुखसंवित्तिः[5] २७
न सकृद्ग्रहणात् सम्बन्धसिद्धिः[6] २८
नियतधर्मसाहित्यमुभयोरेकतरस्य वा व्याप्तिः[7][8] २९
न तत्त्वान्तरं वस्तुकल्पनाप्रसक्तेः ३०
निजशक्त्युद्भवमित्याचार्याः ३१
आधेयशक्तियोग[9] इति पञ्चशिखः ३२
न स्वरूपशक्तिर्नियमः[10] पुनर्वादप्रसक्तेः ३३
विशेषणानर्थक्यप्रसक्तेः ३४
पल्लवादिष्वनुपपत्तेश्च[11] ३५
आधेयशक्तिसिद्धौ निजशक्तियोगः समानन्यायात् ३६

१. ब्रह्मबाधप्रसक्तेः. २. नैफल्यं; नैप्कल्यं. ३. च रहितः. ४. °संयोगात्. ५. सुखादिसंवित्तिः ६. सूत्रान्ते ' स्वप्रतीतिविरोधात् ' इत्यपि निवेशनीयं. ७. नियतं. ८ साहित्य उभयो°. ९. योग इति. [illegible]
११. चकारो रहयितः.

[1]वाच्यवाचकभावः सम्बन्धः शब्दार्थयोः[2] ३७

त्रिभिः सम्बन्धसिद्धिः[3] ३८

न कार्ये नियम उभयथा दर्शनात् ३९

लोके[4] व्युत्पन्नस्य वेदार्थ[5]प्रतीतिः[6] ४०

न त्रिभिरपौरुषेयत्वाद्वेदस्य तदर्थस्या[7]ऽप्यतीन्द्रियत्वात् ४१

न यज्ञादेः स्वरूपतो धर्मत्वं वैशिष्ट्यात्[8] ४२

निजशक्तिर्व्युत्पत्त्या व्यवच्छिद्यते[9] ४३

योग्यायोग्येषु प्रतीतिजनकत्वात् तत्सिद्धिः[10] ४४

न नित्यत्वं वेदानां कार्यत्वश्रुतेः[11] ४५

न पौरुषेयत्वं तत्कर्तुः पुरुषस्याभावात् ४६

[12]न मुक्तामुक्तयोरयोग्यत्वात् ४७

नापौरुषेयत्वान्नित्यत्वमङ्कुरादिवत् ४८

तेषामपि तद्योगे दृष्टबाधादिप्रसक्तिः ४९

यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत् पौरुषेयम् ५०

[13]निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम् ५१

नासतः ख्यानं नृशृङ्गवत् ५२

न सतो बाधदर्शनात् ५३

नानिर्वचनीयस्य तदभावात् ५४

नान्यथाख्यातिः स्ववचोव्याघातात् ५५

[14]सदसत्ख्यातिर्बाधाबाधात्[15] ५६

प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः ५७

---

१. वाच्यवाचकसम्बन्धः; २. 'शब्दार्थयोः' इति तु न विवक्षितं. ३. सम्बन्धसिद्धेः. ४. लोकव्यु°. ५. कार्यप्रतीतेः. ६. प्रतीतेः. ७. अपिस्यक्तः. ८. वैशेष्यात्. ९. विच्छिद्यते. १०. तत्सिद्धेः. ११. कार्यश्रुतेः. १२. 'न' वर्जितः १३. निजशक्त्याभिव्यक्तेः. १४. सदसत्ख्यातिबाधाबाधात्; सदसख्याति. १५. बाधाबाधाभ्यां.

न शब्दनित्यत्वं कार्यताप्रतीतेः ५८

पूर्वसिद्ध[1]सत्त्वस्याभिव्यक्तिर्दीपेनेव[2] घटस्य ५९

सत्कार्यसिद्धान्तश्चेत् सिद्धसाधनम् ६०

नाद्वैतमात्मनो[3] लिङ्गात् तद्भेदप्रतीतेः[4] ६१

नानात्मनापि प्रत्यक्षबाधात् ६२

नोभाभ्यां तेनैव ६३

अन्यपरत्वमविवेकानां तत्र ६४

नोत्माविद्या[5] नोभयं जगदुपादानकारणं निःसङ्गत्वात् ६५

नैक[6]स्यानन्दचिद्रूपत्वे द्वयोर्भेदात् ६६

दुःखनिवृत्तेर्गौणः ६७

विमुक्तिप्रशंसा मन्दानाम् ६८

न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वाद्वा वांस्यादिवच्चक्षुरादिवत् ६९

सक्रियत्वाद्गतिश्रुतेः ७०

न निर्भागत्वं तद्योगाद् घटवत्[9] ७१

प्रकृतिपुरुषयोरन्यत् सर्वमनित्यम् ७२

न भागलाभो[10] भोगिनो निर्भागत्वश्रुतेः[11] ७३

नानन्दाभिव्यक्तिर्मुक्तिर्निर्धर्मत्वात्[12] ७४

न विशेष[13]गुणच्छित्तिस्तद्वत् ७५

न विशेषगतिर्निष्क्रियस्य[14] ७६

---

१. 'सिद्ध' वर्जमपि पाठः. २. व्यक्तिः प्रदीपेनेव. ३. नाद्वैतमात्मनो°. ४. लिङ्गाच्च भेदप्रतीतेः. ५. नात्मा नाविद्या; नात्मानाद्यविद्या; नात्मनाविद्या. ६. कुत्रचित् त्यक्तं. ७. कुत्रचित् त्यक्तोऽयमंशः कुत्रचित् 'तदाशुसंचारित्वात्' पूरितोऽयम्. ८. सूत्रान्ते चकारोऽपि निवेशितः. ९. घटादिवत्. १०, भागिनो वा पाठः ११. निर्भागित्व°. १२. निर्ध[illegible] पाठः. १३. गुणोच्छित्तिर्वा पाठः. १४. निष्क्रियस्येति नापेक्षितमपि[illegible]

नाकारोपरागोच्छित्तिः क्षणिकत्वादिदोषात् ७७

न सर्वोच्छित्ति[1]रपुरुषार्थत्वादिदोषात् ७८

एवं शून्यमपि ७९

संयोगाश्च वियोगान्ता इति[2] न देशादिलाभोऽपि ८०

न[3] भागियोगो भागस्य ८१

नाणिमादियोगोऽप्यवश्यंभावित्वा[4]त्तदुच्छित्ते[5]रितरयोगवत्[6] ८२

नेन्द्रादिपदयोगोऽपि तद्वत् ८३

न भू[7]ताप्रकृतित्वमिन्द्रियाणामा[8]हङ्कारिकत्वश्रुतेः ८४

न षट्पदार्था[9]नियमस्तद्बोधान्मुक्तिः ८५

षोडशादिष्वप्येवम् ८६

नाणुनित्यता तत्कार्यश्रुतेः ८७

न[10] निर्भागत्वं कार्यत्वात् ८८

न रूप[11]निबन्धनात् प्रत्यक्षनियमः[12] ८९

न परिमा[13]णचातुर्विध्यं द्वाभ्यां तद्योगात् ९०

अनित्यत्वेऽपि स्थिरतायोगात् प्रत्यभिज्ञानं सामान्यस्य ९१

न तदपलापस्तस्मात् ९२

नान्यनिवृत्तिरूपत्वं भावप्रतीतेः ९३

न तत्त्वान्तरं सादृश्यं प्रत्यक्षोपलब्धेः ९४

निज[14]शक्त्यभिव्यक्तिर्वा वैशिष्ट्यात्तदुपलब्धेः ९५

न संज्ञासंज्ञिसम्ब[15]न्धोऽपि ९६

---

१. पुरुषार्थत्वादि २. इति वर्जितः" ३. न भागयोगोऽभागस्य ४. °भावितत्वात्. ५. °त्ति° ६. °रितरवियोगवत्. ७. भूतप्रकृतित्वं. ८. अहंकारत्व°; अहंकारिकत्व°; अहंकारकत्व". ९. मुक्तिश्चेतिपाठः. १०. प्राचीनपुस्तके नोध्दृतम्; न तन्निर्भाग त्वं. ११. रूपनिबन्धनः १२. प्रत्यक्षत्वनियमः; प्रत्यक्षत्वमिति नियमः १३. परिमाणे. १४. निजधर्माभिव्यक्तिः १५. संज्ञासंज्ञिनोः

न सम्बन्धनित्योभयानित्यत्वात् ९७

नातः[1] सम्बन्धो धर्मिग्राहक[2]प्रमाणबाधात् ९८

न समवायोऽस्ति[3] प्रमाणाभावात् ९९

[4]उभयथाप्यन्यथासिद्धेर्न[5] प्रत्यक्षमनुमानं वा[6] १००

नानुमेयत्वमेव क्रियाया नेदिष्ठस्य तत्तद्वतोरेव[7]अपरोक्षप्रतीतेः १०१

न पाञ्चभौतिकं शरीरं बहूनामुपादानायोगात् १०२

न स्थूलमिति नियमोऽतिवाहिकस्यापि विद्यमानत्वात् १०३

नाप्राप्तप्रकाशकत्वमिन्द्रियाणामप्राप्तेः सर्वप्राप्तेर्वा १०४

न तेजोऽपसर्पणात्तैजसं चक्षुर्वृत्तितस्तत्सिद्धेः १०५

प्राप्तार्थप्रकाशलिङ्गात् वृत्तिसिद्धिः १०६

भागगुणाभ्यां तत्त्वान्तरं वृत्तिः सम्बन्धार्थं सर्पतीति[8] १०७

न द्रव्ये[9]नियमस्तद्योगात् १०८

न[10] देशभेदेऽप्यन्योपादानताऽस्मदादिवन्नियमः[11] १०९

निमित्तव्यपदेशात्तद्व्यपदेशः ११०

ऊष्मजाण्डजजरायु[12]जोद्भिज्ज[13]साङ्कल्पिकसांसिद्धिकं चेति न नियमः[14] १११

सर्वेषु पृथिव्युपादानमसाधारण्यात् तद्व्यपदेशः पूर्ववत् ११२

न देहारंभकस्य प्राणत्वमिन्द्रियशक्तितस्[15]तत्सिद्धेः ११३

भोक्तुरधिष्ठानाद्भोगायतननिर्माणमन्यथा[16] पूतिभावप्रसंगात्[17] ११४

भृत्य[18]द्वारा[19] स्वाम्यधिष्ठितिर्नैकान्तात्[20] ११५

समाधिसु[21]षुप्तिमोक्षेषु ब्रह्मरूपता ११६

---

१. नातः. २. मानबाधात्. ३. तत्राप्यस्ति. ४. उभयत्राप्यन्यथेति. ५. नरहितः; °सिद्धिर्न ६. प्रत्यक्षानुमाने ७. both एव omitted. ८. सर्पयतीति ९. द्रव्ये. १०. देशभेदोऽपि ११. °स्मदादाविव नियमः. १२. जरायुज उद्भिज° १३. संकल्पज साङ्कल्पिकं; १४. नकारो नापेक्षितः. १५. तत्सिद्धौ वा पाठः. १६. भूतिभावप्रसक्तेः [illegible] प्रसक्तिः; प्रसंगः. १८. 'भृत्यवद धिष्ठानं' इत्येव सूत्रं. १९. भृत्य[illegible]दिति वा पाठः. २१. °सुषुप्त°

द्वयोः सबीजमन्यत्र तद्धतिः ११७

द्वयोरिव त्रयस्यापि[2] दृष्टत्वान्न[3] तु द्वौ ११८

[4]वासनयानर्थख्यापनं दोषयोगेऽपि न निमित्तस्य प्रधानबाधकत्वम् ११९

एकः संसारः क्रियानिर्वर्तको[5] न तु प्रतिक्रियं संस्कारभेदा[6] बहुकल्पनाप्रसक्तेः १२०

न[7] बाह्यबुद्धिनियमो वृक्षगुल्मलतौषधिवनस्पतितृणवीरुधादीनामपि[8] भोक्तृभोगायतनत्वं पूर्ववत् १२१

स्मृतेश्च १२२

न देहमात्रतः कर्माधिकारित्वं वैशिष्ट्यश्रुतेः १२३

त्रिधा त्रयाणां व्यवस्था कर्मदेहोपभोगदेहोभयदेहाः १२४

न किञ्चिदप्यनुशयिनः[9] १२५

न बुद्ध्यादिनित्यत्वमाश्रयविशेषेऽपि वन्हिवत् १२६

आश्रयासिद्धेश्च[10] १२७

योगसिद्धयोऽप्यौषधादिसिद्धिवन्नापलपनीयाः १२८

न भूतचैतन्यं प्रत्येकादृष्टेः[11] सांहत्ये[12] ऽपि[13] च सांहत्येऽपि च १२९

इति पञ्चमोऽध्यायः

---

## अथ षष्ठोऽध्यायः

अस्त्यात्मा नास्तित्व[14]साधनाभावात् १

देहादिव्यतिरिक्तोऽसौ[15] वैचित्र्यात् २

---

१. द्वयोः सबीजत्वमन्यस्य तद्धानिः. २. अपि रहितः ३. 'तु' रहितः पाठोऽपि. ४. वासनया न स्वार्थख्यापनं;न वासनाया आनर्थक्यख्यापनं ५. °निवर्तको; °नुवर्तको ६. संस्कारभेदा रहितः, ७. नेत्यारभ्य नियमान्तं वृक्षेत्यारभ्य पूर्ववदित्यन्तं च योगविभागात् सूत्रद्वयं कल्पितं. ८. वीरुदादीनां वा पाठः ९. °नुशायिनः १०. 'च' रहितः पाठः क्वापि ११. °कानुपलब्धेः १२. स्वसांहत्ये १३. अपि रहितः १४. नास्तित्वे. १५. ऽसौ रहितः.

षष्ठीव्यपदेशादपि ३

न शिलापुत्र[1]वद्धर्मिग्राहकमानबाधात् ४

अत्यन्तदुःखनिवृत्त्या कृतकृत्यता ५

यथा दुःखात् क्लेशः[2] पुरुषस्य न तथा सुखादभिलाषः ६

[3]कुत्रापि कोऽपि सुखीति ७

तदपि दुःखशबलमिति दुःखपक्षे निःक्षिपन्ते[4] विवेचकाः ८

सुखलाभाभावादपुरुषार्थत्वमिति[5] चेत् न[6] द्वैविध्यात्[7] ९

निर्गुणत्वमात्मनोऽसङ्गत्वादिश्रुतेः[8] १०

परधर्मत्वेऽपि तत्सिद्धिरविवेकात् ११

अनादिरविवेकोऽन्यथा दोषद्वयप्रसक्तेः १२

[9]न नित्यः स्यादात्मवदन्यथानुच्छित्तिः[10] १३

प्रतिनियतकारणनाश्यत्वमस्य ध्वान्तवत् १४

अत्रापि प्रतिनियमोऽन्वयव्यतिरेकात् १५

[11]प्रकारान्तरासंभवादविवेक एव बन्धः १६

न मुक्तस्य पुनर्बन्धयोगोऽप्यनावृत्तिश्रुतेः १७

अपुरुषार्थत्वमन्यथा[12] १८

अविशेषापत्तिरुभयोः १९

मुक्तिरन्तरायध्वस्तेर्न परः[13] २०

तत्राप्यविरोधः[14] २१

अधिकारित्रैविध्यान्न नियमः २२

---

१. शिलापुत्रकव°. २. द्वेषः. ३. 'न कुत्रापि इत्यादिः. ४. निक्षिपन्ते; निक्षिपन्नि. ५. °पुरुषार्थमिति. ६. 'चेन्नैवं'. ७. वैचित्र्यात्. ८. असङ्गादिश्रुतेः; ऽसङ्गत्वश्रुतेः. ९. कूटस्थपरिणामि. १०. स्यादात्मवदुच्छित्तेः. ११. प्रकारान्तराभावाद. १२. सूत्रान्ते 'पुनर्बन्धकत्वं' इत्यपि योजितं; अन्यथापुरुषार्थत्वं; अन्यथा र[illegible] [illegible] परः' 'नापरः' वा; °ध्वंसो न परः; °ध्वस्तेः पर्वपरः; परा. १४. सूत्रान्त[illegible] अन्यथा कौटस्थ्यहानिः'.

दाढर्यार्थमुत्तरेषाम् २३
स्थिर[1]सुखमासनमिति न नियमः २४
ध्यानं निर्विषयं मनः २५
उभयथाऽप्यविशेष[2]श्चेन्नैवमुपरागनिरोधा[3]द्विशेषः २६
निःसङ्गेऽप्युपरागोऽविवेकात् २७
जपा[4]स्फटिकयोरिव नोपरागः किन्त्वभिमानः २८
ध्यानधारणाभ्यासवैराग्यादिभिस्तन्निरोधः २९
लयविक्षेपयोर्व्यावृत्त्येत्याचार्याः ३०
न स्थाननियमश्चित्तप्रसादात्[5] ३१
प्रकृतेराद्योपादानतान्येषां कार्यत्वश्रुतेः ३२
नित्यत्वेऽपि नात्मनो योगत्वा[6]भावात् ३३
श्रुतिविरोधा[7]न्न कुतर्कापसदस्यात्मलाभः ३४
पारम्पर्येऽपि प्रधानानुवृत्तिरणुवत् ३५
सर्वत्र कार्यदर्शनाद्विभुत्वम् ३६
गतियोगेऽप्याद्यकारणताहानिरणुवत् ३७
प्रसिद्धाधिक्यं प्रधानस्य न नियमः ३८
सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात् ३९
अनुपभोगेऽपि पुमर्थं सृष्टिः प्रधानस्योष्ट्रकुङ्कुमवहनवत् ४०
कर्मवैचित्र्यात् सृष्टिवैचित्र्यम् ४१
साम्यवैषम्याभ्यां कार्यद्वयम् ४२
विमुक्तबोधान्न सृष्टिः प्रधानस्य लोकवत् ४३
नान्योपसर्पणेऽपि[8] मुक्तोपभोगो[9] निमित्ताभावात् ४४

१. स्थिरं. २. अप्यविशेषं. ३. °विरोधात्. ४. जवास्फटिकयोरिव. ५. चित्तप्रसादाभावात्. ६. अयोग्यत्वाभावात् योग्यत्वाभावात् चेति पाठद्वयं. ७. आत्मविरोधान्न. ८. विमुक्तो.° ९. विमुक्तभोगो भवति.

पुरुषबहुत्वं व्यवस्थातः ४५
उपाधिश्चेत्[1] तत्सिद्धौ पुनर्द्वैतम् ४६
द्वाभ्यामपि [2]प्रमाणविरोधः ४७
द्वाभ्याम्प्यविरोधान्न पूर्वमुत्तरं च साधकाभावात् ४८
प्रकाशतस्तत्सिद्धौ कर्मकर्तृविरोधः[3] ४९
जडव्यावृत्तो[4] जडं प्रकाशयति चिद्रूपः ५०
न श्रुतिविरोधो रागिणां वैराग्याय तत्सिद्धेः ५१
जगत्सत्यत्वमदुष्टकारणजन्यत्वाद् बाधकाभावात् ५२
प्रकारान्तरासम्भवान् सदुत्पत्तिः[5] ५३
अहङ्कारः कर्ता न पुरुषः ५४
चिदवसाना मुक्तिस्तत्कर्मार्जितत्वात् ५५
चन्द्रादिलोकेऽप्यावृत्तिर्निमित्तसद्भावात्[6] ५६
लोकस्य नोपदेशात् सिद्धिः[7] पूर्ववत् ५७
पारम्पर्येण तत्सिद्धौ विमुक्तिश्रुतिः[8] ५८
गतिश्रुतेश्च व्यापकत्वेऽप्युपाधियोगाद्भोगदेशकाललाभो[9] व्योमवत् ५९
अनधिष्ठितस्य[10] पूतिभावप्रसंगान्न तत्सिद्धिः ६०
अदृष्टद्वारा चेदसम्बद्धस्य तदसम्भवाज्जलादिवदङ्कुरे ६१
निर्गुणत्वात् तदसंभवादहङ्कारधर्मा ह्येते ६२
विशिष्टस्य जीवत्वमन्वयव्यतिरेकात् ६३
अहङ्कारकर्त्रधीना कार्यसिद्धिर्नेश्वराधीना प्रमाणाभावात् ६४
अदृष्टोद्भूतिवत्[11] समानत्वम् ६५

१. उपाधिसिद्धिश्चेत्तत्सिद्धौ. २. द्वाभ्यामयं. ३. कर्मकर्तृत्वविरोधः; कर्तृकर्मविरोधः ४. ० व्यावृत्तौ ५. तदुत्पत्तिः ६. निमित्तसंभवात् ७. तत्सिद्धिः ८. विमुक्तश्रुतिः ९. भोगदेशकालादिलाभो १०. पूतिभावयोगात् ११. अदृष्टोद्भूतवत्

महतोऽन्यत् ६६
कर्मनिमित्तः प्रकृतेः स्वस्वामिभावोऽप्यनादिर्बीजाङ्कुरवत् ६७
[1]अविवेकनिमित्तो वा पञ्चशिखः ६८
लिङ्गशरीरनिमित्तक इति सनन्दनाचार्यः ६९
यद्वातद्वा तदुच्छित्तिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः ७० ॥ ॐ ॥

इति शम्

इति सांख्यसूत्राणि समाप्तानि ।

---

1. 'अविवेकनिमित्ते' 'अविवेकनिमित्तको' वा

श्रीमदीश्वरकृष्णप्रणीताः

# सांख्यकारिकाः

दुःखत्रयाभिघाताज्जिज्ञासा तदभिघातके हेतौ ।
दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥ १ ॥
दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः ।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥
मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ ३ ॥
दृष्टमनुमानमाप्तवचनं च, सर्वप्रमाणसिद्धत्वात् ।
त्रिविधं प्रमाणमिष्टं, प्रमेयसिद्धिः प्रमाणाद्धि ॥ ४ ॥
प्रतिविषयाध्यवसायो दृष्टं, त्रिविधमनुमानमाख्यातम् ।
तल्लिङ्गलिङ्गिपूर्वकं, माप्तश्रुतिराप्तवचनं च ॥ ५ ॥
सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रसिद्धिरनुमानात ।
तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम् ॥ ६ ॥
अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात ।
सौक्ष्म्याद् व्यवधानादभिभवात समानाभिहाराच्च ॥ ७ ॥
सौक्ष्म्यात्तदनुपलब्धिर्नाभावात्, कार्यतस्तदुपलब्धिः ।
महदादि तच्च कार्यं, प्रकृतिविरूपं सरूपं च ॥ ८ ॥
असदकरणादुपादानग्रहणात्, सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात्, कारणभावाच्च सत्कार्यम् ॥ ९ ॥
हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥ १० ॥
त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि ।
व्यक्तं तथा प्रधानं, तद्विपरीतस्तथा च पुमान् ॥ ११ ॥
प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः ।
अन्योऽन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ॥ १२ ॥
सत्त्वं लघु [illegible]पष्टम्भकं चलं च रजः ।
गुरुवरणकमेव तमः [illegible]र्थतो वृत्तिः ॥ १३ ॥

अविवेक्यादिः सिद्धः त्रैगुण्यात्तद्विपर्ययाभावात् ।
कारणगुणात्मकत्वात् कार्यस्याव्यक्तमपि सिद्धम् ॥ १४ ॥
भेदानां परिमाणात्, समन्वयात्, शक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागात्, अविभागाद्वैश्वरूप्यस्य ॥ १५ ॥
कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतः समुदयाच्च ।
परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात् ॥ १६ ॥
संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् ।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ॥ १७ ॥
जननमरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च ।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव ॥ १८ ॥
तस्माच्च विपर्यासात् सिद्धं साक्षित्वमस्य पुरुषस्य ।
कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च ॥ १९ ॥
तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥ २० ॥
पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।
पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ २१ ॥
प्रकृतेर्महान्, ततोऽहङ्कारः तस्माद्गणश्च षोडशकः ।
तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि ॥ २२ ॥
अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम् ।
सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम् ॥ २३ ॥
अभिमानोऽहङ्कारस्तस्माद्द्विविधः प्रवर्तते सर्गः ।
एकादशकश्च गणस्तन्मात्रः पञ्चकश्चैव ॥ २४ ॥
सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् । सात्त्विक
भूतादेस्तन्मात्रः स तामसः, तैजसादुभयम् ॥ २५ ॥ २।७।५१
बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनस्पर्शनकानि ।
वाक्पाणिपादपायूपस्थान् कर्मेन्द्रियाण्याहुः ॥ २६ ॥
उभयात्मकमत्र मनः संकल्पकमिन्द्रियं च साधर्म्यात् ।
गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च ॥ २७ ॥

शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः।
वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥ २८ ॥
स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या।
सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ २९ ॥
युगपच्चतुष्टयस्य तु वृत्तिः क्रमशश्च तस्य निर्दिष्टा।
दृष्टे तथाऽप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः ॥ ३० ॥
स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम्।
पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम् ॥ ३१ ॥
करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम्।
कार्यं च तस्य दशधाऽऽहार्यं धार्यं प्रकाश्यं च ॥ ३२ ॥
अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम्।
साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥ ३३ ॥
बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि।
वाग्भवति शब्दविषया शेषाणि तु पञ्चविषयाणि ॥ ३४ ॥
सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात्।
तस्मात् त्रिविधं करणं द्वारि द्वाराणि शेषाणि ॥ ३५ ॥
एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः।
कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥ ३६ ॥
सर्वं प्रत्युपभोगं यस्मात् पुरुषस्य साधयति बुद्धिः।
सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥ ३७ ॥
तन्मात्राण्यविशेषाः तेभ्यो भूतानि पञ्च पञ्चभ्यः।
एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च ॥ ३८ ॥
सूक्ष्मा मातापितृजाः सह प्रभूतैस्त्रिधा विशेषाः स्युः।
सूक्ष्मास्तेषां नियता मातापितृजा निवर्तन्ते ॥ ३९ ॥
पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम्।
संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥ ४० ॥
चित्रं यथाश्रयमृते स्थाण्वादिभ्यो यथा विना छाया।
तद्वद्विनाऽविशेषैः न तिष्ठति निराश्रयं लिङ्गम् ॥ ४१

पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन ।
प्रकृतेर्विभुत्वयोगात् नटवद्व्यवतिष्ठते लिङ्गम् ॥ ४२ ॥
सांसिद्धिकाश्च भावाः प्राकृतिका वैकृतिकाश्च धर्माद्याः ।
दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः ॥ ४३ ॥
धर्मेण गमनमूर्ध्वं गमनमधस्ताद् भवत्यधर्मेण ।
ज्ञानेन चापवर्गो विपर्ययादिष्यते बन्धः ॥ ४४ ॥
वैराग्यात् प्रकृतिलयः संसारो भवति राजसाद्रागात् ।
ऐश्वर्यादविघातो विपर्ययात् तद्विपर्यासः ॥ ४५ ॥
एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः ।
गुणवैषम्यविमर्द्देन तस्य भेदास्तु पञ्चाशत् ॥ ४६ ॥
पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात् ।
अष्टाविंशति भेदाः तुष्टिर्नवधाऽष्टधा सिद्धिः ॥ ४७ ॥
भेदस्तमसोऽष्टविधो मोहस्य च, दशविधो महामोहः ।
तामिस्रोऽष्टादशधा, तथा भवत्यन्धतामिस्रः ॥ ४८ ॥
एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा ।
सप्तदश वधा बुद्धेर्विपर्ययात् तुष्टिसिद्धीनाम् ॥ ४९ ॥
आध्यात्मिकाश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः ।
बाह्या विषयोपरमात् पञ्च, नव तुष्टयोऽभिहिताः ॥ ५० ॥
ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ।
दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥ ५१ ॥
न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः ।
लिङ्गाख्यो भावाख्यस्तस्माद् द्विविधः प्रवर्तते सर्गः ॥ ५२ ॥
अष्टविकल्पो दैवस्तैर्यग्योनश्च पञ्चधा भवति ।
मानुष्यश्चैकविधः समासतोऽयं त्रिधा सर्गः ॥ ५३ ॥
ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः ।
मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्यन्तः ॥ ५४ ॥
तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः ।
लिङ्गस्याविनिवृत्तेः, तस्माद् दुःखं स्वभावेन ॥ ५५ ॥

इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्यन्तः ।
प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ॥ ५६ ॥
वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥ ५७ ॥
औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः ।
पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥ ५८ ॥
रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात् ।
पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥ ५९ ॥
नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः ।
गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति ॥ ६० ॥
प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति ।
या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ ६१ ॥
तस्मान्न बध्यते नापि मुच्यते नापि संसरति कश्चित् ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ ६२ ॥
रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः ।
सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥ ६३ ॥
एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥
तेन निवृत्तप्रसवामर्थवशात् सप्तरूपविनिवृत्ताम् ।
प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वस्थः ॥ ६५ ॥
रङ्गस्थ इत्युपेक्षक एको दृष्टाहमित्युपरमत्येका ।
सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥ ६६ ॥
सम्यग्ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ ।
तिष्ठति संस्कारवशाच्चक्रभ्रमवद्धृतशरीरः ॥ ६७ ॥
प्राप्ते शरीरभेदे चरितार्थत्वात् प्रधानविनिवृत्तौ ।
ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६८ ॥
पुरुषार्थज्ञानमिदं गुह्यं परमर्षिणा समाख्यातम् ।
स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र [illegible] ॥

एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ ।
आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम् ॥ ७० ॥
शिष्यपरम्परयाऽऽगतमीश्वरकृष्णेन चैतदार्याभिः ।
संक्षिप्तमार्यमतिना सम्यग्विज्ञाय सिद्धान्तम् ॥ ७१ ॥
सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।
आख्यायिकाविरहिताः परवादविवर्जिताश्चापि ॥ ७२ ॥

इति श्रीमदीश्वरकृष्णप्रणीताः सांख्यकारिकाः समाप्ताः ।



*Printed by* : S. R. Sardesai, B.A., LL.B., Navin Samarth Vidyalaya's 'Samarth Bharat' Press, 947, Sadashiv Peth, Poona 2.

AND

*Published by* : Dr. N. G. Sardesai, L.M.S., for the Oriental Book Agency, 15 Shukrawar, Poona (India).